।। ओं श्री गणेश शारदा गुरुभ्यो नमः ।।

।। श्री वेदव्यासाय नमः ।।

# ।। महान्यास जपः ।।




For copies of this book please contact-
Shri S. Parameswaran
14/52, Manjula,
Pestom Sagar Rd.No.2
Chembur, Mumbai- 400 089.
Tel: 2 524 2155

ओं श्री गणेश शारदा गुरुभ्यां नमः
श्री वेदव्यसाय नमः

# महान्यासः




For copies of this book please contact :
*Parameswara Sharma*
*Veda Class*
*14/52 Manjula, Pestom Sagar,*
*Chembur, Mumbai - 400 089*
*Tel : 524 2155*

१९९९



## ।। श्री शृङ्गेरी श्रीजगद्गुरुमहासंस्थानम् ।।



श्रीमत्परमहंसपरिव्राचकाचार्यवर्य पदवाक्यप्रमाणपारावारपारीण यमनियमासनप्राणायाम प्रत्याहार धारणाध्यानसमाध्यष्टाङ्गयोगानिष्ठाननिष्ठ तपश्चक्रवर्त्यनाद्यविच्छिन्न श्रीशङ्कराचार्यगुरुपरम्पराप्राप्त षड्दर्शनस्थापनाचार्य व्याख्यानसिंहासनाधीश्वर सकलनिगमागमसारहृदय सांख्यत्रयप्रतिपादक वैदिकमार्ग प्रवर्तक सर्वतन्त्र-स्वतन्त्रादिराजधानी विद्यानगर महाराजधानी कर्णाटकसिंहासन प्रतिष्ठापनाचार्य श्रीमद्राजाधिराजगुरुभूमण्डलाचार्य ऋष्यशृङ्गपुरवराधीश्वर तुङ्गभद्रातीरवासि श्रीमद्विद्याशङ्करपादपद्माराधक श्रीजगद्गुरु श्रीमदभिनवविद्यातीर्थस्वामि गुरुकरकमलसञ्जात

### ।। श्रीजगद्गुरु शृङ्गेरी श्रीमद्भारतीतीर्थस्वामिभिः ।।

अस्मदत्यन्तप्रियशिष्य श्रीपरमेश्वरशर्म विषये नारायणस्मरणपुरस्सर विरचिता आशिषस्समुल्लसन्तु।

भवन्तः वेदमधीत्य शिष्यानध्यापयन्तः अधुना लोकानामुपकाराय अत्यावश्यक वेदभागान् स्थूलाक्षरैः सस्वरं प्रकाशयन्तीति विदित्वा भृशं मोदामहे। अत्र हि रुद्रक्रमः महान्यासः उदकशान्तिरित्यादयः प्रकाशिता ये सर्वेषामत्यन्तमावश्यकाः। भवदीयोऽयमुद्यमः धर्मश्रद्धालूनामास्तिकानां प्रशंसापात्रमिति तु निश्चप्रचम्।

श्री शारदाचन्द्रमौळीश्वरयोरसीमया कृपया इमे ग्रन्थाः आस्तिकजन पाणिपल्लवान्यलंकुर्वन्तु भवन्तश्च श्रेयःपरम्पराभिस्समेधन्तामित्याशास्महे।।

इति नारायणस्मरणम्

शृङ्गगिरिः

प्रमाथिश्रावणकृष्णाष्टमी भार्गववासरः — मुद्रा

३-९-१९९९

SRI GURUBHYO NAMAHA






MUTUAL TRUST — FRIENDSHIP — TOLERANCE—OUR TRADITION

# Sri Sankara Jayanthi Celebration Committee

6, Savitha, 70,Pestomsagar, 2nd Road, Tilaknagar P.O., BOMBAY - 89.
Tel. Nos. : 5241864

Date .....

## FOREWORD

Shri Parameswara Sharma has been conducting Veda Classes in Pestom Sagar Chembur, for over two decades, and has trained over a hundred vidyarthis comprising of a wide range of asthikas covering school children, college boys, office-goers and retired elders. He has been associated with our Shri Sankara Jayanthi Celebration Committee for the past 16 years conducting Rudra-japa-abhisheka-puja along with his disciples.

Shri Parameswara Sharma's teaching skill and the recitation of vedic hymns by his disciples have been appreciated by many eminent vedic scholars and patrons of Religious & Cultural Organisations.

A momentous occasion was in June 1994, when, pleased with the excellent Ghana recitation by a few of Parameswara Sharma's young disciples,and in appreciation of his glorious spiritual service,HisHoliness Shri Bharathi Theertha Swamigal, Sringeri Mutt blessed and honoured him with a *'Ponnadai'*.

**Besides conducting veda classes, Shri Parameswara Sharma devotes his available time in compiling Vedic Literature into convenient books, in bold print, very useful to vidyarthis and religious practioners. He has compiled the following books :-**

**RUDRAM -CHAMAKAM**
**RUDRA KRAMAM**
**CHAMAKA KRAMAM**
**MAHANYASAM**
**UDAKA SHANTHI**
**ACHIDRAM**
**ASWAMEDHAM (1)**

**Copies of books compiled by Parameswara Sharma were presented to HIS HOLINESS SHRI BHARATHI THEERTHA SWAMIGAL, for His approval & blessings. His Holiness has gone through the books and has expressed His happiness and said that the books are very good and would be useful to the students**

**Appreciating his effort & dedication, His Holiness has blessed Shri Parameswara Sharma with a *SHREEMUKHAM.***

**I, on behalf of the Sri Sankara Jayanthi Celebration Committee, pray to Almighty to bestow upon Shri Parameswara Sharma, a healthy, blissful and long life to continue his noble social service of propagating Vedas and Vedic Culture among the youth and active citizens.**

V. V. Achalam

**V. Venkitachalam**
**Secretary**
**Sri Sankara Jayanthi Celebration Committee**

**13th September 1999.**

# विषयानुक्रमणिका

# विषयानुक्रमणिका



***** *****

ओं श्री गणेश शारदा गुरुभ्यो नमः

श्री वेदव्यासाय नमः

हरिः ओ(४)म्

# कलशस्थापनम्

१. ब्रह्मजज्ञानं प्रथमं पुरस्ताद्विसीमत
स्सुरुचो वेन आवः। स बुद्ध्निया उपमा
अस्य विष्ठा स्सतश्च योनिमसतश्च विवः।।

२. नाके सुपर्णमुपयत्पतन्तꣳ हृदा वेनन्तो
अभ्यचक्षतत्वा। हिरण्यपक्षँव्वरुणस्य दूतँ-
य्यमस्य योनौ शकुनं भुरण्युम्।।

३. आप्यायस्व समेतु ते विश्वत स्सोम
वृष्णियम्। भवा वाजस्य सङ्गथे।।

४. योरुद्रो अग्नौ यो अप्सु य ओषधीषु
यो रुद्रो विश्वा भुवनाऽऽविवेश तस्मै रुद्राय
नमो अस्तु।।

५. इदं विष्णुर्विचक्रमे त्रेधा निदधे
पदम्। समूढमस्य पाꣳसुरे।।

६. इन्द्रं विश्वा अवीवृधन्त्समुद्र व्यचसङ्-
गिरः। रथीतमꣳरथीनां वाजानाꣳसत्पतिं
पतिम्।।

आपो वा इदꣳ सर्वं विश्वा भूतान्यापः
प्राणा वा आपः पशव आपोऽन्नमापोऽमृतमाप
स्सम्राडापो विराडाप स्स्वराडापश्छन्दाꣳस्यापो
ज्योतीꣳष्यापो यजूꣳष्याप स्सत्यमाप स्सर्वा
देवता आपो भूर्भुवस्सुवराप ओम्।।

अपः प्रणयति। श्रद्धा वा आपः।
श्रद्धामेवारभ्य प्रणीय प्रचरति।।

अपः प्रणयति। यज्ञो वा आपः।
यज्ञमेवारभ्य प्रणीय प्रचरति।।

अपः प्रणयति। वज्रो वा आपः।
वज्रमेव भ्रातृव्येभ्यः प्रहृत्य प्रणीय प्रचरति।।

अपः प्रणयति। आपो वै रक्षोघ्नीः।
रक्षसामपहत्यै।।

अपः प्रणयति। आपो वै देवानां
प्रियन्धाम। देवानामेव प्रियन्धाम प्रणीय
प्रचरति।।

अपः प्रणयति। आपो वै सर्वा देवताः।
देवता एवारभ्य प्रणीय प्रचरति।।

अपः प्रणयति। आपो वै शान्ताः।

शान्ताभिरेवास्य शुचꣳशमयति।।

देवोवस्सवितोत्पुनातु। अच्छिद्रेण पवित्रेण।

वसोस्सूर्यस्य रश्मिभिः।।

कूर्चाग्रै राक्षसान्घोरान् छिन्धि कर्म

विघातिनः। त्वामर्पयामि कुम्भेस्मिन्थ्साफल्यं

कुरु कर्मणि।।

वृक्षराज समुद्भूता श्शाखायाः पल्लव-

त्त्वचः। युष्मान्कुम्भेष्वर्पयामि सर्व पापापनुत्तये।।

नाळिकेर समुद्भूत त्रिणेत्र हरसम्मत।

शिखया दुरितं सर्वं पापं पीडाञ्च मे नुद।।

सहि रत्नानि दाशुषे सुवाति सविता

भगः। तं भागञ्चित्रमीमहे।।

तत्त्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते

यजमानो हविर्भिः। अहेडमानो वरुणेह

बोद्ध्युरुशꣳसमान आयुः प्रमोषीः।।

# श्री महान्यास प्रारम्भः

अथातः पञ्चाङ्गरुद्राणां न्यास पूर्वकं जपहोमार्चनाभिषेकविधिं व्याख्यास्यामः।।

## प्रथमः न्यासः

१. या ते रुद्र शिवा तनूरघोरापाप-
काशिनी। तया नस्तनुवा शन्तमया
गिरिशन्ताभि चाकशीहि।। (शिखायाम्)

२. अस्मिन्महत्यर्णवेऽन्तरिक्षे भवा अधि।
तेषाँ सहस्रयोजनेऽवधन्वानि तन्मसि।।
(शिरसि)

(ललाटे) ३. सहस्राणि सहस्रशो ये रुद्रा अधि

भूम्याम्। तेषाँ सहस्रयोजनेऽवधन्वानि तन्मसि।

(भ्रुवोर्मद्ध्ये)

४. हँसश्शुचिषद्वसुरन्तरिक्षसद्धोता

वेदिषदतिथिर्दुरोणसत्। नृषद्वरसदृतसद्-

व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्।

(नेत्रयोः) ५. त्र्यम्बकँय्यजामहे सुगन्धिं पुष्टिवर्द्धनम्।

उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात्।।

६. नमस्स्रुत्याय च पत्थ्याय च नमः

काट्याय च नीप्याय च।। (कर्णयोः)

(नासिकायाम्)

७. मा नस्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः। वीरान्मा नो रुद्रभामितो वधीर् हविष्मन्तो नमसाविधेमते।

(मुखे) ८. अवतत्य धनुस्त्वꣳसहस्राक्ष शतेषुधे। निशीर्य शल्यानां मुखा शिवो नस्सुमना भव।

(कण्ठे) ९. नीलग्रीवा शिशतिकण्ठा श्शर्वा अधः क्षमाचराः। तेषाꣳसहस्रयोजनेऽव धन्वानि तन्मसि।

नीलग्रीवाशिशतिकण्ठा दिवꣳरुद्रा

उपश्रिताः। तेषाँसहस्रयोजनेऽव धन्वानि

तन्मसि।

(बाह्वोः) १०. नमस्ते अस्त्वायुधायानातताय धृष्णवे।

उभाभ्यामुत ते नमो बाहुभ्यान्तव धन्वने।।

(उपबाह्वोः) ११. याते हेतिर्मीढुष्टम हस्ते बभूव तेधनुः।

तयाऽस्मान् विश्वतस्त्वमयक्ष्मया परिब्भुज।।

१२. परिणो रुद्रस्य हेतिर्वृणक्तु परित्वेषस्य

दुर्मतिरघायोः। अवस्थिरा मघवद्भ्यस्तनुष्व

मीढ्वस्तोकाय तनयाय मृडय।। (मणिबन्धयोः)

१३. ये तीर्थानि प्रचरन्ति सृकावन्तो निषङ्गिणः। तेषाँ सहस्रयोजनेऽव धन्वानि तन्मसि।। (हस्तयोः)

१४. सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः। भवेभवे नातिभवे भवस्व माम्। भवोद्भवाय नमः ।। (अङ्गुष्ठाभ्याम्)

वामदेवाय नमोज्येष्ठाय नमश्श्रेष्ठाय नमो रुद्राय नमःकालाय नमःकलविकरणाय नमो बलविकरणाय नमोबलाय नमो बलप्रमथनाय

नमस्सर्वभूतदमनाय नमो मनोन्मनाय नमः ।।

(तर्जनीभ्याम्)

अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः ।

(मद्ध्यमाभ्याम्)

सर्वेभ्यस्सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः ।।

तत्पुरुषाय विद्महे महादेवाय धीमहि ।

तन्नो रुद्रः प्रचोदयात् ।। (अनामिकाभ्याम्)

ईशानस्सर्व विद्यानामीश्वर स्सर्वभूतानां

ब्रह्माऽधिपति ब्रह्मणोऽधिपति ब्रह्मा शिवो मे

अस्तु सदाशिवोम् ।। (कनिष्ठिकाभ्याम्)

(हृदये) १५. नमो वःकिरिकेभ्यो देवाना॑ृहृदयेभ्यः।

(पृष्ठे) १६. नमो गणेभ्यो गणपतिभ्यश्च वो नमः।

१७. नमो हिरण्यबाहवे सेनान्ये दिशाञ्च

पतये नमः। (पार्श्वयोः)

१८. विज्यन्धनुः कपर्द्दिनो विशल्यो

बाणवा॑ृउत। अनेशन्नस्येषव आभुरस्य

निषङ्गथिः।। (जठरे)

१९. हिरण्यगर्भ स्समवर्त्तताग्रे भूतस्य जातः

पतिरेक आसीत्। स दाधार पृथिवीन्द्यामुतेमां

कस्मै देवाय हविषा विधेम।। (नाभौ)

२०. मीढुष्टम शिवतम शिवो न स्सुमना भव। परमे वृक्ष आयुधन्निधाय कृत्तिं वसान आ चर पिनाकं बिभ्रदागहि।। (कट्याम्)

२१. ये भूतानामधिपतयो विशिखासः कपर्द्दिनः। तेषाँ सहस्रयोजनेऽव धन्वानि तन्मसि।। (गुह्ये)

२२. ये अन्नेषु विविध्यन्ति पात्रेषु पिबतो जनान्। तेषाँ सहस्रयोजनेऽवधन्वानि तन्मसि।।

(अण्डयोः)

(अपाने) २३. सशिरा जातवेदा अक्षरं परमं पदम्।

वेदाना ँ शिरसि माता आयुष्मन्तं करोतु माम्।।

२४. मानो महान्तमुत मा नो अर्भकं मा

न उक्षन्तमुत मा न उक्षितम्। मा नो वधीः

पितरं मोत मातरं प्रिया मा नस्तनुवो रुद्र

रीरिषः।। (ऊरुवोः)

२५. एष ते रुद्र भागस्तञ्जुषस्व

तेनावसेन परो मूजवतोऽतीह्यवततधन्वा

पिनाकहस्तः कृत्तिवासाः।। (जान्वोः)

२६. स॒ꣳसृ॒ष्ट॒जि॒त्सो॒म॒पा बा॒हु॒श॒र्द्ध्यू॒र्द्ध्व-
ध॒न्वा प्र॒ति॒हि॒ता॒भि॒रस्ता। बृह॒स्प॒ते परि॒दीया॒
रथे॒न र॒क्षो॒हामि॒त्राꣳ अप॒बाध॒मा॒नः।। (जङ्घयोः)

२७. विश्वं॒ भू॒तं भु॒वन॒ञ्चि॒त्रं ब॒हु॒धा
जा॒त॒ञ्जा॒य॒मा॒न॒ञ्च॒ य॒त्। सर्वो॒ ह्ये॒ष रु॒द्रस्त॒स्मै
रु॒द्रा॒य॒ नमो॒ अस्तु।। (गुल्फयोः)

२८. ये प॒थां प॒थि॒र॒क्ष॒य ऐ॒ल॒बृ॒दा य॒व्यु॒धः।
तेषाꣳ स॒ह॒स्र॒यो॒ज॒नेऽव॒ धन्वा॒नि तन्म॒सि।।
(पादयोः)

२९. अद्ध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक्। अहीँश्च सर्वाञ्जम्भयन्त्सर्वाश्च यातुधान्यः ।। (कवचम्)

३०. नमो बिल्मिने च कवचिने च नमश्श्रुताय च श्रुतसेनाय च।। (उपकवचम्)

३१. नमो अस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे। अथो ये अस्य सत्वानोऽहन्तेभ्योऽकरन्नमः।। (तृतीयं नेत्रम्)

(अस्त्रम्) ३२. प्रमुञ्च धन्वनस्त्वमुभयोरार्त्नियोर्ज्याम्।

याश्च ते हस्त इषवः परा ता भगवो वप।।

३३. य एतावन्तश्च भूया॑सश्च दिशो रुद्रा वितस्थिरे। तेषा॑सहस्रयोजनेऽवधन्वानि तन्मसि।। (दिग्बन्धः)

## द्वितीयो न्यासः

ओन्नमः। नन्नमः। मोन्नमः। भन्नमः। गन्नमः। वन्नमः। तेन्नमः। रुन्नमः। द्रान्नमः। यन्नमः।।

ओंकारं मूर्ध्नि विन्यस्य न कारं नासिकाग्रतः।
मोकारं तु ललाटे वै भकारं मुखमद्ध्यतः।।
गकारं कण्ठदेशे तु वकारं हृदि विन्यसेत्।
तेकारं दक्षिणे हस्ते रुकारं वामतो न्यसेत्।।
द्राकारं नाभिदेशे तु यकारं पादयोर्न्यसेत्।।

## तृतीयो न्यासः

सद्योजातं प्रपद्यामि सद्योजाताय वै नमो
नमः। भवेभवे नातिभवे भवस्व माम्।।
भवोद्भवाय नमः।। (पादयोः)

वामदेवाय नमो ज्येष्ठाय नम श्श्रेष्ठाय
नमो रुद्राय नमःकालाय नमःकलविकरणाय
नमो बलविकरणाय नमो बलाय नमो
बलप्रमथनाय नम स्सर्वभूतदमनाय नमो
मनोन्मनाय नमः।। (ऊरुमद्ध्यतः)

(हृदि) अघोरेभ्योऽथघोरेभ्यो घोरघोरतरेभ्यः ।

सर्वेभ्यस्सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः ।

तत्पुरुषाय विद्महे महादेवाय धीमहि ।

तन्नो रुद्रः प्रचोदयात् ।। (मुखे)

ईशान स्सर्वविद्यानामीश्वर स्सर्वभूतानां

ब्रह्माधिपतिर्ब्रह्मणोऽधिपति ब्रह्मा शिवोमे अस्तु

सदाशिवोम् ।। (मूर्ध्नि)

# हंसगायत्री

अस्य श्री हंसगायत्री महामन्त्रस्य- अव्यक्त परब्रह्म ऋषिः- अनुष्टुप् छन्दः- परमहंसो देवता हंसां बीजम्। हंसीं शक्तिः। हंसूं कीलकम्। परमहंस प्रसादसिद्ध्यर्थे जपे विनियोगः।।

| | |
|---|---|
| हंसां अङ्गुष्ठाभ्यान्नमः। | हंसां हृदयाय नमः। |
| हंसीं तर्जनीभ्यान्नमः। | हंसीं शिरसे स्वाहा। |
| हंसूं मद्ध्यमाभ्यान्नमः | हंसूं शिखायै वषट्। |
| हंसैं अनामिकाभ्यान्नमः। | हंसैं कवचाय हुम्। |
| हंसौं कनिष्ठिकाभ्यान्नमः। | हंसौं नेत्रत्रयाय वौषट्। |
| हंसः करतलकरपृष्ठाभ्यान्नमः | हंसः अस्त्राय फट्। |

भूर्भुवस्सुवरोमिति दिग्बन्धः।।

ध्यानम्।

गमागमस्थं गमनादि शून्यम्।
चिद्रूपदीपं तिमिरापहारम्।
पश्यामि तं सर्वजनान्तरस्थं
नमामि हंसं परमात्म रूपम्।।

हंसहंसाय विद्महे परम हंसाय धीमहि।
तन्नो हंसः प्रचोदयात्।।

हंस हंसेति योब्रूयाद्धंसो नाम सदाशिवः।
एवन्न्यासविधिं कृत्वा ततः संपुटमारभेत्।

।। *सम्पुटः* ।।

१. ओं भूर्भुवस्सुवरों लम्।

त्रातारमिन्द्रमवितारमिन्द्रꣳहवेहवे सुहवꣳ

शूरमिन्द्रम्। हुवेनु शक्रं पुरुहूतमिन्द्रꣳस्वस्ति

नो मघवा धात्विन्द्रः।।

लं इन्द्राय वज्रहस्ताय सुराधिपतय ऐरावतवाहनाय साङ्गाय सायुधाय सशक्ति परिवारायोमामहेश्वर पार्षदाय नमः।।

लं इन्द्राय नमः। पूर्वदिग्भागे इन्द्रस्सुप्रीतो वरदो भवतु।।

२. ओं भूर्भुवस्सुवरों रम्।

त्वन्नो अग्ने वरुणस्य विद्वान्देवस्य हेडोऽवया-
सिसीष्ठाः। यजिष्ठो वह्नितमश्शोशुचानो
विश्वाद्वेषाꣳसि प्रमुमुग्ध्यस्मत्।।

रं अग्नये शक्तिहस्ताय तेजोऽधिपतये अजवाहनाय साङ्गाय सायुधाय सशक्ति परिवारायोमामहेश्वर पार्षदाय नमः।।

रं अग्नये नमः। आग्नेयदिग्भागे अग्निस्सुप्रीतो वरदो भवतु।।

३. ओं भूर्भुवस्सुवरों हम्।

सुगन्नः पन्थामभयङ्कृणोतु। यस्मिन्नक्षत्रे यम

एति राजा। यस्मिन्नेनमभ्यषिञ्चन्त देवाः।

तदस्य चित्रँहविषा यजाम।।

हं यमाय दण्डहस्ताय धर्माधिपतये महिषवाहनाय साङ्गाय सायुधाय सशक्ति परिवारायोमामहेश्वर पार्षदाय नमः।।

हं यमाय नमः। दक्षिणदिग्भागे यमस्सुप्रीतो वरदो भवतु।।

४. ओं भूर्भुवस्सुवरों षम्।

असुन्वन्तमयजमानमिच्छस्तेनस्येत्यान्तस्कर स्यान्वेषि। अन्यमस्मदिच्छ सा त इत्या नमो देवि निरृते तुभ्यमस्तु।।

षं निरृतये खड्गहस्ताय रक्षोऽधिपतये नरवाहनाय साङ्गाय सायुधाय सशक्ति परिवारायोमामहेश्वर पार्षदाय नमः।।

षं निरृतये नमः।

नैरृतिदिग्भागे निरृतिस्सुप्रीतो वरदो भवतु।।

५. ओं भूर्भुवस्सुवरों वम्।

तत्त्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते
यजमानो हविर्भिः। अहेडमानो वरुणेह
बोद्ध्युरुशꣳसमान आयुः प्रमोषीः।।

वं वरुणाय पाशहस्ताय जलाधिपतये
मकरवाहनाय साङ्गाय सायुधाय सशक्ति
परिवारायोमामहेश्वर पार्षदाय नमः।।

वं वरुणाय नमः।

पश्चिमदिग्भागे वरुणस्सुप्रीतो वरदो
भवतु।।

६. ओं भूर्भुवस्सुवरों यम्।

आनो नियुद्भि श्शतिनीभिरद्ध्वरम्।
सहस्त्रिणीभिरुपयाहि यज्ञम्। वायो अस्मिन्
हविषिमादयस्व। यूयं पात स्स्वस्तिभि
स्सदानः।।

यं वायवे साङ्कुशद्ध्वजहस्ताय
प्राणाधिपतये मृगवाहनाय साङ्गाय
सायुधाय सशक्ति परिवारायोमामहेश्वर
पार्षदाय नमः।।

यं वायवे नमः।
वायव्यदिग्भागे वायुस्सुप्रीतो वरदो भवतु।।

७. ओं भूर्भुवस्सुवरों सम्।
वय७सोमव्रते तव। मनस्तनूषु बिभ्रतः।
प्रजावन्तो अशीमहि।।

सं सोमायामृतकलहस्ताय नक्षत्राधिपतये अश्ववाहनाय साङ्गाय सायुधाय सशक्ति परिवारायोमामहेश्वर पार्षदाय नमः।।

सं सोमाय नमः।
उत्तरदिग्भागे सोमस्सुप्रीतो वरदो भवतु।।

८. ओं भूर्भुवस्सुवरों शम्।

तमीशानञ्जगत स्तस्थुषस्पतिम् -

धियञ्जिन्वमवसे हूमहे वयम्। पूषा नो यथा

वेदसामसद्वृधे रक्षिता पायुरदब्ध स्वस्तये।।

शं ईशानाय शूलहस्ताय विद्याधिपतये
वृषभवाहनाय साङ्गाय सायुधाय सशक्ति
परिवारायोमामहेश्वर पार्षदाय नमः।।

शं ईशानाय नमः।
ऐशान्यदिग्भागे ईशानस्सुप्रीतो वरदो भवतु।।

९. ओं भूर्भुवस्सुवरों अम्।

अस्मे रुद्रा मेहना पर्वतासो वृत्रहत्ये भरहूतौ सजोषाः। यश्शंसते स्तुवते धायिपज्र इन्द्रज्येष्ठा अस्मां अवन्तु देवाः।।

अँ ब्रह्मणे पद्महस्ताय लोकाधिपतये हंसवाहनाय साङ्गाय सायुधाय सशक्ति परिवारायोमामहेश्वर पार्षदाय नमः।।

अं ब्रह्मणे नमः।
ऊद्ध्र्वंदिग्भागे ब्रह्मा सुप्रीतो वरदो भवतु।।

१०. ओं भूर्भुवस्सुवरों ह्रीम्।

स्योना पृथिवि भवा नृक्षरा निवेशनी।
यच्छा नश्शर्म सप्रथाः।।

ह्रीं विष्णवे चक्रहस्ताय नागाधिपतये गरुडवाहनाय साङ्गाय सायुधाय सशक्ति परिवारायोमामहेश्वर पार्षदाय नमः।।

ह्रीं विष्णवे नमः।
अधोदिग्भागे विष्णुस्सुप्रीतो वरदो भवतु।।

## रौद्रीकरणम्

१. विभूरसि प्रवाहणो रौद्रेणानीकेन पाहि माऽग्ने पिपृहि मा मा मा हिꣳसीः।

२. वह्निरसि हव्यवाहनो रौद्रेणानीकेन पाहि माऽग्ने पिपृहि मा मा मा हिꣳसीः।

३. श्वात्रोऽसि प्रचेता रौद्रेणानीकेन पाहि माऽग्ने पिपृहि मा मा मा हिꣳसीः।

४. तुथोऽसि विश्ववेदा रौद्रेणानीकेन पाहि माऽग्ने पिपृहि मा मा मा हिꣳसीः।

५. उशिगसि कवी रौद्रेणानीकेन पाहि माऽग्ने पिपृहि मा मा मा हिꣳसीः।

६. अङ्घारिरसि बम्भारी रौद्रेणानीकेन पाहि माऽग्ने पिपृहि मा मा मा हिꣳसीः।

७. अवस्युरसि दुवस्वान् रौद्रेणानीकेन पाहि माऽग्ने पिपृहि मा मा मा हिꣳसीः।

८. शुन्ध्यूरसि मार्जालीयो रौद्रेणानीकेन पाहि माऽग्ने पिपृहि मा मा मा हिꣳसीः।

९. सम्राडसि कृशानू रौद्रेणानीकेन

पाहि माऽग्ने पिपृहि मा मा मा हिꣳसीः।

१०. परिषद्योसि पवमानो रौद्रेणानीकेन

पाहि माऽग्ने पिपृहि मा मा मा हिꣳसीः।

११. प्रतक्वासि नभस्वान् रौद्रेणानीकेन

पाहि माऽग्ने पिपृहि मा मा मा हिꣳसीः।

१२. असंमृष्टोऽसि हव्यसूदो रौद्रेणानीकेन

पाहि माऽग्ने पिपृहि मा मा मा हिꣳसीः।

१३. ऋतधामासि सुवर्ज्योती रौद्रेणानीकेन

पाहि माऽग्ने पिपृहि मा मा मा हिꣳसीः ।

१४. ब्रह्मज्योतिरसि सुवर्द्धामा रौद्रेणानीकेन

पाहि माऽग्ने पिपृहि मा मा मा हिꣳसीः ।

१५. अजोऽस्येकपाद्रौद्रेणानीकेन पाहि

माऽग्ने पिपृहि मा मा मा हिꣳसीः ।

१६. अहिरसि बुद्ध्नियो रौद्रेणानीकेन पाहि

माऽग्ने पिपृहि मा मा मा हिꣳसीः ।

त्वगस्थिगतै स्सर्व पापैः प्रमुच्यते।
सर्वभूतेष्वपराजितो भवति। ततो भूत प्रेत
पिशाच ब्रह्मराक्षस यक्ष यमदूत शाकिनी
डाकिनी सर्प श्वापद वृश्चिक तस्कराद्युप-
द्रवाद्युपघाताः । सर्वे ज्वलन्तं पश्यन्तु।
मां (यजमानं) सकुटुम्बं रक्षन्तु।।

## चतुर्थो न्यासः

१. *(गुह्ये)* मनो ज्योति र्जुषतामाज्यं विच्छिन्न य्यँज्ञ ँ समिमन्दधातु। या इष्टा उषसो निम्रुचश्च तास्सन्दधामि हविषाघृतेन।

२. *(नाभौ)* अबोद्ध्यग्नि स्समिधा जनानां प्रतिधेनुमिवायतीमुषासम्। यह्वा इव प्रवयामुज्जिहानाः प्रभानवस्सिस्त्रते नाकमच्छ॥

३. *(हृदये)* अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम्। अपा ँ रेता ँ सि जिन्वति।।

४. *(कण्ठे)* मूर्द्धानं दिवो अरतिं पृथिव्या वैश्वानरमृताय जातमग्निम्। कवि॑सम्राज-मतिथिञ्जनानामासन्नापात्रञ्जनयन्त देवाः।।

५. *(मुखे)* मर्माणि ते वर्मभिश्छादयामि सोमस्त्वा राजाऽमृतेनाभिवस्ताम्। उरोर्वरीयो वरिवस्ते अस्तु जयन्तन्त्वामनु मदन्तु देवाः।

६. *(शिरसि)* जातवेदा यदिवा पावकोऽसि। वैश्वानरो यदि वा वैद्युतोऽसि। शं प्रजाभ्यो

यजमानाय लोकम्। ऊर्जं पुष्टिन्ददद्भ्या-
ववृथ्स्व।।

## आत्मरक्षा

१. ब्रह्मात्मन्वदसृजत। तदकामयत।
समात्मनापद्येयेति। आत्मन्नात्मन्नित्यामन्त्रयत।
तस्मै दशम७हूतः प्रत्यशृणोत्। स दशहूतोऽ
भवत्। दशहूतो हवैनामैषः। तं वा एत-
न्दशहूत७सन्तम्। दशहोतेत्याचक्षते
परोक्षेण। परोक्षप्रिया इव हि देवाः।।

२. आत्मन्नात्मन्नित्यामन्त्रयत। तस्मै सप्तम७हूतः प्रत्यशृणोत्। स सप्तहूतोऽभवत्। सप्तहूतो हवैनामैषः। तं वा एत७ सप्तहूत७सन्तम्। सप्तहोतेत्याचक्षते परोक्षेण। परोक्षप्रिया इव हि देवाः।।

३, आत्मन्नात्मन्नित्यामन्त्रयत। तस्मै षष्ठ७हूतः प्रत्यशृणोत्। स षड्ढूतोऽभवत्। षड्ढूतो हवैनामैषः। तंवा एत७षड्ढूत७सन्तम्। षड्ढोतेत्याचक्षते परोक्षेण। परोक्षप्रिया इवहि देवाः।।

४. आत्मन्नात्मन्नित्यामन्त्रयत। तस्मै पञ्चम<sup></sup>ँ हूतः प्रत्यशृणोत्। स पञ्चहूतोऽभवत्। पञ्चहूतो ह्वैनामैषः। तं वा एतं पञ्चहूतँ सन्तम्। पञ्चहोतेत्याचक्षते परोक्षेण। परोक्षप्रिया इव हि देवाः।।

५. आत्मन्नात्मन्नित्यामन्त्रयत। तस्मै चतुर्थँ हूतः प्रत्यशृणोत्। स चतुर्हूतोऽभवत्। चतुर्हूतो ह्वैनामैषः। तं वा एतञ्चतुर्हूतँ सन्तम्। चतुर्होतेत्याचक्षते परोक्षेण।

परोक्षप्रिया इव हि देवाः।।

तमब्रवीत् त्वं वै मे नेदिष्ठꣳहूतः प्रत्यश्रौषीः। त्वयैनानाख्यातार इति। तस्मान्नुहैनाꣳश्चतुर्होतार इत्याचक्षते। तस्माच्छुश्रूषुः पुत्राणाꣳहृद्यतमः। नेदिष्ठो हृद्यतमः। नेदिष्ठो ब्रह्मणो भवति। य एवं वेद। आत्मने नमः।।

## पञ्चमो न्यासः

### *शिवसङ्कल्पम्*

१. येनेदं भूतं भुवनं भविष्यत्परिगृहीतममृतेन सर्वम्। येन यज्ञस्त्रायते सप्तहोता तन्मे मनश्शिवसङ्कल्पमस्तु।।

२. येन कर्माणि प्रचरन्ति धीरा यतो वाचा मनसा चारु यन्ति। यत्सम्मितमनु सँय्यन्ति प्राणिनस्तन्मे मनश्शिवसङ्कल्पमस्तु।

३. येन कर्माण्यपसो मनीषिणो यज्ञे कृण्वन्ति विदथेषु धीराः। यदपूर्वं यक्ष्ममन्तः

प्रजानान्तन्मे मनश्शिवसङ्कल्पमस्तु।।

४. यत्प्रज्ञानमुत चेतो धृतिश्च यज्ज्योति-
रन्तरमृतं प्रजासु। यस्मान्न ऋते किञ्चन कर्म
क्रियते तन्मे मनश्शिवसङ्कल्पमस्तु।।

५. सुषारथिरश्वानिव यन्मनुष्यान्नेनीयते
भीशुभिर्वाजिन इव। हृत्प्रतिष्ठं यदजिरं
यविष्ठं तन्मे मनश्शिवसङ्कल्पमस्तु।।

६. यस्मिन्नृच स्साम यजूँषि यस्मिन्
प्रतिष्ठा रथनाभाविवाराः। यस्मिँश्चित्तँ

सर्वमोतं प्रजानान्तन्मे मनश्शिवसङ्कल्पमस्तु।

७. यदत्र षष्ठन्त्रिशत॑ꣳसुवीरं यज्ञस्य गुह्यन्नवनावमाय्यम्। दश पञ्च त्रिꣳशतं यत्परञ्च तन्मे मनश्शिवसङ्कल्पमस्तु।।

८. यज्जाग्रतो दूरमुदैति दैवं तदुषुप्तस्य तथैवैति। दूरङ्गमञ्ज्योतिषाञ्ज्योतिरेकन्तन्मे मनश्शिवसङ्कल्पमस्तु।।

९. येनेदं विश्वञ्जगतो बभूव ये देवापि महतो जातवेदाः। तदेवाग्निस्तमसो ज्योति-

रेकन्तन्मे मनश्शिवसङ्कल्पमस्तु।।

१०. येन द्यौः पृथिवी चान्तरिक्षञ्च ये पर्वताः प्रदिशो दिशश्च। येनेदञ्जगद्व्याप्तं प्रजानान्तन्मे मनश्शिवसङ्कल्पमस्तु।।

११. ये मनो हृदयं ये च देवा ये दिव्या आपो ये सूर्यरश्मिः। ते श्रोत्रे चक्षुषी सञ्चरन्तन्तन्मे मनश्शिवसङ्कल्पमस्तु।।

१२. अचिन्त्यञ्चाप्रमेयञ्च व्यक्ताव्यक्तपरञ्च यत्। सूक्ष्मात्सूक्ष्मतरं ज्ञेयन्तन्मे मनश्शिव

सङ्कल्पमस्तु।।

१३. एका च दश शतञ्च सहस्रञ्चायुत-
ञ्च नियुतञ्च प्रयुतञ्चार्बुदञ्च न्यर्बुदञ्च
समुद्रश्च मद्ध्यञ्चान्तश्च परार्द्धश्च तन्मे
मनश्शिवसङ्कल्पमस्तु।।

१४. ये पञ्च पञ्चादश शत॰सहस्र-
मयुतन्न्यर्बुदञ्च। ते अग्निचित्येष्टकास्त॰
शरीरन्तन्मे मनश्शिवसङ्कल्पमस्तु।।

१५. वेदाहमेतं पुरुषं महान्तमादित्यवर्ण-

न्तमसः परस्तात्। यस्य योनिं परिपश्यन्ति
धीरास्तन्मे मनश्शिवसङ्कल्पमस्तु।।

१६. यस्येदन्धीराः पुनन्ति कवयो ब्रह्माण-
मेतन्त्वा वृणत इन्दुम्। स्थावरञ्जङ्गम-
न्द्यौराकाशन्तन्मे मनश्शिवसङ्कल्पमस्तु।।

१७. परात्परतरञ्चैव यत्पराच्चैव यत्परम्।
यत्परात्परतो ज्ञेयन्तन्मे मनश्शिवसङ्कल्प-
मस्तु।।

१८. परात्परतरो ब्रह्मा तत्परात्परतो हरिः।

तत्परात्परतोऽधीशस्तन्मे मनश्शिव-
सङ्कल्पमस्तु।।

१९. या वेदादिषु गायत्री सर्वव्यापी
महेश्वरी। ऋग्यजुस्सामाथर्वैश्च तन्मे मन-
श्शिवसङ्कल्पमस्तु।।

२०. यो वै देवं महादेवं प्रणवं परमेश्वरम्।
यस्सर्वे सर्व वेदैश्च तन्मे मनश्शिवसङ्कल्प-
मस्तु।।

२१. प्रयतःप्रणवोङ्कारं प्रणवं पुरुषोत्तमम्।

ओङ्कारं प्रणवात्मानन्तन्मे मनश्शिव-
सङ्कल्पमस्तु ।।

२२. योऽसौ सर्वेषु वेदेषु पठ्यते ह्यज
ईश्वरः। अकायो निर्गुणो ह्यात्मा तन्मे
मनश्शिवसङ्कल्पमस्तु ।।

२३. गोभिर्जुष्टन्धनेन ह्यायुषा च बलेन च।
प्रजया पशुभिः पुष्कराक्षन्तन्मे मनश्शिव-
सङ्कल्पमस्तु ।।

२४. कैलासशिखरे रम्ये शङ्करस्य

शिवालये। देवतास्तत्र मोदन्ते तन्मे मनश्शिव
सङ्कल्पमस्तु।।

२५. त्र्यम्बकँय्यजामहे सुगन्धिं पुष्टि-
वर्द्धनम्। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय
माऽमृतात्तन्मे मनश्शिवसङ्कल्पमस्तु।।

२६. विश्वतश्चक्षुरुत विश्वतोमुखो
विश्वतोहस्त उत विश्वतस्पात्। संबाहुभ्या-
न्नमति संपतत्रैर्द्यावापृथिवी जनयन्देव
एकस्तन्मे मनश्शिवसङ्कल्पमस्तु।।

२७. चतुरो वेदानधीयीत सर्वशास्त्रमयं विदुः। इतिहासपुराणानान्तन्मे मनश्शिव सङ्कल्पमस्तु।।

२८. मा नो महान्तमुत मा नो अर्भकं मा न उक्षन्तमुत मा न उक्षितम्। मा नो वधीः पितरं मोत मातरं प्रिया मा नस्तनुवो रुद्र रीरिषस्तन्मे मनश्शिवसङ्कल्पमस्तु।।

२९. मा नस्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः। वीरान्मानो

रुद्र भामितो वधीर् हविष्मन्तो नमसा
विधेम ते तन्मे मनश्शिवसङ्कल्पमस्तु ।।

३०. ऋतꣳसत्यं परं ब्रह्मपुरुषङ्कृष्ण
पिङ्गलम् । ऊर्द्ध्वरेतं विरूपाक्षं विश्वरूपाय
वै नमो नमस्तन्मे मनश्शिवसङ्कल्पमस्तु ।।

३१. कद्रुद्राय प्रचेतसे मीढुष्टमाय तव्यसे ।
वोचेम शन्तमꣳहृदे । सर्वो ह्येष रुद्रस्तस्मै
रुद्राय नमो अस्तु तन्मे मनश्शिव-
सङ्कल्पमस्तु ।।

३२. ब्रह्मजज्ञानं प्रथमं पुरस्ताद्विसीमत
स्सुरुचो वेन आवः। स बुद्ध्नियाः उपमा
अस्य विष्ठास्सतश्च योनिमसतश्च
विवस्तन्मे मनश्शिवसङ्कल्पमस्तु।।

३३. यः प्राणतो निमिषतो महित्वैक
इद्राजा जगतो बभूव। य ईशे अस्य द्विपद-
श्चतुष्पदः कस्मै देवाय हविषा विधेम तन्मे
मनश्शिवसङ्कल्पमस्तु।।

३४. य आत्मदा बलदा यस्य विश्व उपासते प्रशिषँ य्यस्य देवाः। यस्य छायाऽमृतँ य्यस्य मृत्युः कस्मै देवाय हविषा विधेम तन्मे मनश्शिवसङ्कल्पमस्तु।।

३५. यो रुद्रो अग्नौ यो अप्सु यओषधीषु यो रुद्रो विश्वा भुवनाऽऽविवेश तस्मै रुद्राय नमो अस्तु तन्मे मनश्शिवसङ्कल्पमस्तु।

३६. गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्। ईश्वरीँ सर्वभूतानां तामिहोपह्वये श्रियन्तन्मे मनश्शिव-सङ्कल्पमस्तु॥

३७ य इदँ शिवसङ्कल्पँ सदाध्यायन्ति ब्राह्मणाः। ते परं मोक्षङ्गमिष्यन्ति तन्मे मनश्शिवसङ्कल्पमस्तु॥

हृदयाय नमः॥

# पुरुषसूक्तम्।।

१. सहस्रशीर्षा पुरुषः। सहस्राक्षः
सहस्रपात्। स भूमिँ व्विश्वतो वृत्त्वा।
अत्यतिष्ठद्दशाङ्गुलम्।।

२. पुरुष एवेदꣳसर्वम्। यद्भूतँ य्यच्च
भव्यम्। उतामृतत्त्वस्येशानः। यदन्नेनाति-
रोहति।।

३. एतावानस्य महिमा। अतो ज्यायाꣳश्च
पूरुषः। पादोऽस्य विश्वा भूतानि। त्रिपाद-

स्यामृतन्दिवि ।।

४. त्रिपादूर्ध्व उदैत्पुरुषः। पादोऽस्येहा-
भवात्पुनः। ततो विष्वङ् व्यक्रामत्।
साशनानशने अभि ।।

५. तस्माद्विराडजायत। विराजो अधि
पूरुषः। सजातो अत्यरिच्यत। पश्चाद्भूमि-
मथो पुरः ।।

६. यत्पुरुषेण हविषा। देवा यज्ञमतन्वत।
वसन्तो अस्यासीदाज्यम्। ग्रीष्म इद्ध्म

श्शरद्धविः।।

७. सप्तास्स्यासन्परिधयः। त्रिस्सप्त
समिधः कृताः। देवा यद्यज्ञं तन्वानाः।
अबध्नन् पुरुषं पशुम्।।

८. तँय्यज्ञं बर्हिषि प्रौक्षन्न्। पुरुषञ्जात-
मग्रतः। तेन देवा अयजन्त। साध्या
ऋषयश्च ये।।

९. तस्माद्यज्ञात्सर्वहुतः। सम्भृतं
पृषदाज्यम्। पशूँस्ताँश्चक्रे वायव्यान्।

आरण्यान् ग्राम्याश्च ये।।

१०. तस्माद्यज्ञात्सर्वहुतः। ऋचस्सामानि
जज्ञिरे। छन्दांसि जज्ञिरे तस्मात्।
यजुस्तस्मादजायत।।

११. तस्मादश्वा अजायन्त। येकेचो-
भयादतः। गावो ह जज्ञिरे तस्मात्।
तस्माज्जाता अजावयः।।

१२. यत्पुरुषँ व्यदधुः। कतिधाव्यकल्पयन्।
मुखं किमस्य कौ बाहू। कावूरू पादावुच्येते।

१३. ब्राह्मणोऽस्य मुखमासीत्। बाहूराजन्यः कृतः। ऊरू तदस्य यद्वैश्यः। पद्भ्या७शूद्रो अजायत।।

१४. चन्द्रमा मनसो जातः। चक्षोस्सूर्यो अजायत। मुखादिन्द्रश्चाग्निश्च। प्राणाद्वायु-रजायत।।

१५. नाभ्या आसीदन्तरिक्षम्। शीर्ष्णो द्यौस्समवर्तत। पद्भ्यां भूमिर्दिशश्श्रोत्रात्। तथा लोका७अकल्पयन्न्।।

१६. वेदाहमेतं पुरुषं महान्तम्। आदित्य-
वर्णं तमसस्तु पारे। सर्वाणि रूपाणि
विचित्य धीरः। नामानि कृत्वाभिवदन्
यदास्ते।।

१७. धाता पुरस्ताद्यमुदाजहार। शक्रः
प्रविद्वान्प्रदिशश्चतस्त्रः। तमेवं विद्वानमृत इह
भवति। नान्यः पन्था अयनाय विद्यते।।

१८. यज्ञेन यज्ञमयजन्त देवाः। तानि धर्माणि प्रथमान्यासन्। ते ह नाकं महिमा नस्सचन्ते। यत्र पूर्वे साध्यास्सन्ति देवाः।।

*शिरसे स्वाहा।।*

## उत्तरनारायणम्

अद्भ्यः सम्भूतः पृथिव्यै रसाच्च।
विश्वकर्मण स्समवर्तताधि। तस्य त्वष्टा
विदधद्रूपमेति। तत्पुरुषस्य विश्वमाजानमग्रे।

वेदाहमेतं पुरुषं महान्तम्। आदित्यवर्णं
तमसः परस्तात्। तमेवं विद्वानमृत इह
भवति। नान्यः पन्था विद्यतेऽयनाय।

प्रजापतिश्चरति गर्भे अन्तः।
अजायमानो बहुधा विजायते। तस्य धीराः
परि जानन्ति योनिम्। मरीचीनां

पदमिच्छन्ति वेधसः ।।

यो देवेभ्य आतपति। यो देवानां पुरोहितः। पूर्वो यो देवेभ्यो जातः। नमो रुचाय ब्राह्मये ।।

रुचं ब्राह्मञ्जनयन्तः। देवा अग्रे तदब्रुवन्। यस्त्वैवं ब्राह्मणो विद्यात्। तस्य देवा असन्वशे।।

ह्रीश्च ते लक्ष्मीश्च पत्न्यौ। अहोरात्रे पार्श्वे। नक्षत्राणि रूपम्। अश्विनौ व्यात्तम्।

इ॒ष्टं म॑निषाण। अ॒मुं म॑निषाण। सर्वं॑ मनिषाण।।

*शिखायै वषट्।।*

## अप्रतिरथम्

आशुश्शिशानो वृषभो न युध्मो घनाघनः
क्षोभणश्चर्षणीनाम्। सन्क्रन्दनो निमिष
एकवीरश्शतꣳसेना अजयत्साकमिन्द्रः।
सङ्क्रन्दनेनानिमिषेण जिष्णुना
युत्कारेण दुश्च्यवनेन धृष्णुना। तदिन्द्रेण
जयत तत्सहद्ध्वँ य्युधोनर इषुहस्तेन वृष्णा।
स इषुहस्तै स्सनिषङ्गिभिर्वशी
सꣳस्त्रष्टा सयुध इन्द्रो गणेन। सꣳसृष्टजित्

सोमपा बाहुशर्द्ध्यूर्द्ध्व धन्वा प्रतिहिताभि-
रस्ता।

बृहस्पते परिदीया रथेन रक्षोहाऽमित्राँ
अपबाधमानः। प्रभञ्जन्थ्सेनाः प्रमृणो युधा
जयन्नस्माकमेद्ध्यविता रथानाम्।

गोत्रभिदङ्गोविदँ वज्रबाहुञ्जयन्तमज्म
प्रमृणन्तमोजसा। इमँ सजाता अनुवीरय-
द्ध्वमिन्द्रँ सखायोऽनु सँरभद्ध्वम्।

बलविज्ञाय स्थविरः प्रवीरस्सहस्वान्

वाजी सहमान उग्रः। अभिवीरो अभिसत्त्वा
सहोजा जैत्रमिन्द्र रथमातिष्ठ गोवित्।
अभिगोत्राणि सहसा गाहमानोऽदायो
वीरश्शतमन्युरिन्द्रः। दुश्च्यवनः पृतनाषाड-
युद्ध्योऽस्माकꣳ सेना अवतु प्रयुत्सु।
इन्द्र आसान्नेता बृहस्पति र्दक्षिणा यज्ञः
पुर एतु सोमः। देवसेनानामभिभञ्जतीना-
ञ्जयन्तीनां मरुतो यन्त्वग्रे।
इन्द्रस्य वृष्णो वरुणस्य राज्ञ आदित्यानां

मरुता॑ꣳशर्द्ध उग्रम्। महामनसां भुवन-
च्यवानाङ्घोषो देवानाञ्जयतामुदस्थात्।

अस्माकमिन्द्र स्समृतेषु ध्वजेष्वस्माकँ-
य्या इषवस्ता जयन्तु। अस्माकँव्वीरा उत्तरे
भवन्त्वस्मानु देवा अवता हवेषु।

उद्धर्षय मघवन्नायुधान्युथ्सत्त्वनां
मामकानां महा॑ꣳसि। उद्वृत्रहन्वाजिनां
वाजिनान्युद्रथानाञ्जयतामेतु घोषः।

उपप्रेत जयता नरस्थिरावस्सन्तु बाहवः।

इन्द्रो वश्शर्म यच्छत्त्वनाधृष्या यथाऽसथ।

अवसृष्टा परापत शरव्ये ब्रह्मसंशिता।

गच्छामित्रान्प्रविश मैषाङ्कञ्चनोच्छिषः।

मर्माणि ते वर्मभिश्छादयामि सोमस्त्वा

राजाऽमृतेनाभिवस्ताम्। उरोर्वरीयो वरिवस्ते

अस्तु जयन्तन्त्वामनुमदन्तु देवाः।

यत्र बाणास्संपतन्ति कुमारा विशिखा

इव। इन्द्रो नस्तत्र वृत्रहा विश्वाहा शर्म

यच्छतु।। *कवचाय हुम्।।*

## प्रतिपूरुषम् (१)

प्रतिपूरुषमेककपालान्निर्वपत्येकमतिरिक्तँ-
य्यावन्तो गृह्यास्स्मस्तेभ्यः कमकरं पशूना७
शर्मासि शर्म यजमानस्य शर्म मे यच्छैक एव
रुद्रो न द्वितीयाय तस्थ आखुस्ते रुद्र
पशुस्तञ्जुषस्वैष ते रुद्र भाग स्सह स्वस्त्राऽ-
म्बिकया तञ्जुषस्व भेषजङ्गवेऽश्वाय
पुरुषाय भेषजमथो अस्मभ्यं भेषज७सुभेषजँ
य्यथासति। सुगं मेषाय मेष्या अवाम्ब

रुद्रमदिमह्यव देवं त्र्यम्बकम्। यथा नश्श्रेयसः
करद्यथा नो वस्यसः करद्यथा नः पशुमतः
करद्यथानो व्यवसायययात्।।
त्र्यम्बकँय्यजामहे सुगन्धिं पुष्टिवर्द्धनम्।
उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात्।।
एष ते रुद्र भागस्तञ्जुषस्व तेनावसेन
परो मूजवतोऽतीह्यवततधन्वा पिनाकहस्तः
कृत्तिवासाः।।

## प्रतिपूरुषम् (२)

प्रतिपूरुषमेककपालान्निर्वपति। जाता एव प्रजा रुद्रान्निरवदयते। एकमतिरिक्तम्। जनिष्यमाणा एव प्रजा रुद्रान्निरवदयते। एककपाला भवन्ति। एकधैव रुद्रन्निरवदयते। नाभिघारयति। यदभिघारयेत्। अन्तरवचारिणꣳरुद्रङ्कुर्यात्। एकोल्मुकेन यन्ति। तद्धि रुद्रस्य भागधेयम्। इमान्दिशँ य्यन्ति। एषा वै रुद्रस्य दिक्। स्वायामेव दिशि रुद्र-

न्निरवदयते। रुद्रो वा अपशुकाया आहुत्यै
नातिष्ठत। असौ ते पशुरिति निर्दिशेद्यन्द्वि-
ष्यात्। यमेव द्वेष्टि। तमस्मै पशुन्निर्द्दिशति।
यदि न द्विष्यात्। आखुस्ते पशुरिति ब्रूयात्।
न ग्राम्यान् पशून् हिनस्ति। नारण्यान्।
चतुष्पथे जुहोति। एष वा अग्नीनां पड्बीशो
नाम। अग्निवत्येव जुहोति। मद्ध्यमेन पर्णेन
जुहोति। स्रुग्घ्येषा। अथो खलु। अन्तमेनैव
होतव्यम्। अन्तत एव रुद्रन्निरवदयते।

एष ते रुद्र भागस्सह स्वस्राऽम्बिकयेत्याह। शरद्वा अस्याम्बिका स्वसा। तया वा एष हिनस्ति। यꣳ हिनस्ति। तयैवैनꣳ सह शमयति। भेषजङ्गव इत्याह। यावन्त एव ग्राम्याः पशवः। तेभ्यो भेषजङ्करोति। अवाम्ब रुद्रमदिमहीत्याह। आशिषमेवैतामा-शास्ते। त्र्यम्बकँय्यजामह इत्याह। मृत्योर्मुक्षीय माऽमृतादिति वावैतदाह। उत्किरन्ति। भगस्य लीफ्सन्ते। मूते कृत्वा

सजन्ति। यथा जनय्यँतेऽवसङ्करोति।
तादृगेवतत्। एष ते रुद्र भाग इत्याह
निरवत्यै। अप्रतीक्षमायन्ति। अपः परि-
षिञ्चति। रुद्रस्यान्तर्हित्यै। प्रवा एतेऽस्मा-
ल्लोकाच्च्यवन्ते। ये त्र्यम्बकैश्चरन्ति। आदित्य-
ञ्चरुं पुनरेत्य निर्व्वपति। इयँ व्वा अदितिः।
अस्यामेव प्रतितिष्ठन्ति।।

नेत्रत्रयाय वौषट्।।

## शतरुद्रीयम् ।।

त्वमग्ने रुद्रो असुरो महो दिवः। त्वँ शर्द्धो
मारुतं पृक्ष ईशिषे। त्वं वातैररुणैर्यासि
शङ्गयः। त्वं पूषा विधतः पासि नुत्मना॥
देवा देवेषु श्रयद्ध्वम्। प्रथमा द्वितीयेषु
श्रयद्ध्वम्। द्वितीयास्तृतीयेषु श्रयद्ध्वम्।
तृतीयाश्चतुर्थेषु श्रयद्ध्वम्। चतुर्थाः पञ्चमेषु
श्रयद्ध्वम्। पञ्चमाष्षष्ठेषु श्रयद्ध्वम्। षष्ठा
स्सप्तमेषु श्रयद्ध्वम्। सप्तमा अष्टमेषु

श्रयद्ध्वम्। अष्टमा नवमेषु श्रयद्ध्वम्।
नवमा दशमेषु श्रयद्ध्वम्। दशमा एकादशेषु
श्रयद्ध्वम्। एकादशा द्वादशेषु श्रयद्ध्वम्।
द्वादशास्त्रयोदशेषु श्रयद्ध्वम्। त्रयोदशा-
श्चतुर्दशेषु श्रयद्द्वम्। चतुर्दशाः पञ्चदशेषु
श्रयद्ध्वम्। पञ्चदशाष्षोडशेशु श्रयद्ध्वम्।
षोडशास्सप्तदशेषु श्रयद्ध्वम्। सप्तदशा
अष्टादशेषु श्रयद्ध्वम्। अष्टादशा एकान्न-
विꣳशेषु श्रयद्ध्वम्। एकान्नविꣳशा

विꣳशेषु श्रयद्ध्वम्। विꣳशा एकविꣳशेषु श्रयद्ध्वम्। एकविꣳशा द्वाविꣳशेषु श्रयद्ध्वम्। द्वाविꣳशा स्त्रयोविꣳशेषु श्रयद्ध्वम्। त्रयोविꣳशाः श्चतुर्विꣳशेषु श्रयद्ध्वम्। चतुर्विꣳशाः पञ्चविꣳशेषु श्रयद्ध्वम्। पञ्चविꣳशाष्षड्विꣳशेषु श्रयद्ध्वम्। षड्विꣳशास्सप्त विꣳशेषु श्रयद्ध्वम्। सप्तविꣳशा अष्टाविꣳशेषु श्रयद्ध्वम्। अष्टाविꣳशा एकान्नत्रिꣳशेषु

श्रयद्ध्वम्। एकान्नत्रि॑ꣳशा स्त्रि॑ꣳशेषु

श्रयद्ध्वम्। त्रि॑ꣳशा एकत्रि॑ꣳशेषु

श्रयद्ध्वम्। एकत्रि॑ꣳशा द्वात्रि॑ꣳशेषु

श्रयद्ध्वम्। द्वात्रि॑ꣳशा स्त्रयस्त्रि॑ꣳशेषु

श्रयद्ध्वम्। देवा स्त्रिरेकादशा स्त्रिस्त्रय-

स्त्रि॑ꣳशाः। उत्तरे भवत। उत्तर वर्त्मान उत्तर

सत्त्वानः। यत्काम इदञ्जुहोमि। तन्मे

समृद्ध्यताम्। वँयꣳस्याम पतयो रयीणाम्।

भूर्भुवस्स्वस्स्वाहा।। *अस्त्राय फट्।।*

(पञ्चाङ्गं सकृज्जपेत्)।।

ह॒ꣳसश्शु॑चि॒षद्व॑सुरन्तरिक्ष॒सद्धोता॑ वेदि॒ष-
द॑तिथि दु॑रोण॒सत्। नृ॒षद्व॑र॒सदृ॑त॒सद्व्यो॑म॒स-
द॒ब्जा गो॒जा ऋ॑त॒जा अ॑द्रि॒जा ऋ॒तं बृ॒हत्।।

प्रतद्वि॑ष्णुस्तवते वी॒र्य्या॑य। मृ॒गो न भी॒मः
कु॑च॒रो गि॑रि॒ष्ठाः। यस्यो॒रुषु॑ त्रि॒षु वि॒क्रम॑णेषु।
अ॑धिक्षि॒यन्ति॒ भु॑वना॒नि विश्वा॑।।

त्र्य॑म्बकँय्यजामहे सु॒गन्धिं॑ पु॑ष्टि॒वर्द्धनम्।
उ॒र्वा॒रु॒क॑मि॒व बन्ध॑नान्मृ॒त्योर्मु॑क्षीय॒ मा॑ऽमृता॑त्।

तत्सवितुर्वृणीमहे। वयन्देवस्य भोजनम्। श्रेष्ठꣳसर्वधातमम्। तुरं भगस्य धीमहि।।

विष्णुर्योनिं कल्पयतु। त्वष्टा रूपाणि पिꣳशतु। आसिञ्चतु प्रजापतिः। धाता गर्भन्दधातु ते।।

## अष्टाङ्ग प्रणामः।।

१. हिरण्यगर्भ स्समवर्तताग्रे भूतस्य
जातः पतिरेक आसीत्। स दाधारपृथिवी-
न्द्यामुतेमाङ्कस्मै देवाय हविषा विधेम।।

२. यः प्राणतो निमिषतो महित्त्वैक
इद्राजा जगतो बभूव। य ईशे अस्य द्विपद-
श्चतुष्पदः कस्मै देवाय हविषा विधेम।।

३. ब्रह्मजज्ञानं प्रथमं पुरस्ताद्विसीमत-
स्सुरुचो वेन आवः। स बुध्निया उपमा अस्य

विष्ठा स्सतश्च योनिमसतश्च विवः ।।

४. मही द्यौः पृथिवी च न इमँ य्यज्ञं
मिमिक्षताम् । पिपृतान्नो भरीमभिः ।।

५. उपश्वासय पृथिवीमुत द्यां पुरुत्रा ते
मनुतां विष्ठितञ्जगत् । स दुन्दुभे सजूरिन्द्रेण
देवै दूराद्दवीयो अपसेध शत्रून् ।।

६. अग्ने नय सुपथा राये अस्मान्
विश्वानि देव वयुनानि विद्वान् । युयोद्ध्यस्म
ज्जुहुराणमेनो भूयिष्ठान्ते नमउक्तिं विधेम ।।

७. या ते अग्ने रुद्रिया तनूस्तया नः पाहि तस्यास्ते स्वाहा।। (या ते अग्ने/ याशया रजाशया हराशया तनूर्वर्षिष्ठा गह्वरेष्ठोग्रं वचो अपावधीन्त्वेषम् वचो अपावधीँस्वाहा)।।

८. इमँय्यमप्रस्तरमाहि सीदाङ्गिरोभिः पितृभि स्सँव्विदानः। आत्त्वा मन्त्राः कवि-शस्ता वहन्त्वेना राजन् हविषा मादयस्व।।

(उमामहेश्वराभ्यान्नमः)

(उरसा शिरसा दृष्ट्या मनसा वचसा तथा।

पद्भ्यां कराभ्यां कर्णाभ्यां प्रणामोऽष्टाङ्ग उच्यते।)

अथद्ध्यानम्।।

(अथात्मानं शिवात्मानं श्रीरुद्ररूपं ध्यायेत्)।

शुद्धस्फटिक संकाशं त्रिणेत्रम् पञ्चवक्त्रकम्

गंगाधरं दशभुजं सर्वाभरण भूषितम्।।

नीलग्रीवं शशाङ्काङ्गं नागयज्ञोपवीतिनम्।

व्याघ्रचर्मोत्तरीयञ्च वरेण्यमभयप्रदम्।

कमण्डल्वक्षसूत्रे च दधानं शूलपाणिनम्।

ज्वलन्त्तं पिङ्गळजटं शिखामद्ध्योदधारिणम् ।

वृषस्कन्ध समारूढं उमादेहार्द्ध धारिणम् ।

अमृतेनाऽप्लुतं हृष्टं दिव्यभोग समन्वितम् ।।

दिग्देवता समायुक्तं सुरासुर नमस्कृतम् ।

नित्यं च शास्वतं शुद्धं ध्रुवमक्षरमव्ययम् ।।

सर्वव्यापिनमीशानं रुद्रं वै विश्वरूपिणम् ।

एवन्ध्यात्वा द्विजस्सम्यक् ततो यजनमारभेत् ।

## षष्ठः न्यासः

### (लघु न्यासः)

प्रजनने ब्रह्मा तिष्ठतु। पादयो र्विष्णु स्तिष्ठतु। हस्तयो र्हरस्तिष्ठतु। बाह्वोरिन्द्र-स्तिष्ठतु। जठरेऽग्निस्तिष्ठतु। हृदये शिव-स्तिष्ठतु। कण्ठे वसवस्तिष्ठन्तु। वक्त्रे सरस्वती तिष्ठतु। नासिकयोर्वायुस्तिष्ठतु। नयनयोश्चन्द्रादित्यौ तिष्ठेताम्। कर्णयो-रश्विनौ तिष्ठेताम्। ललाटे रुद्रास्तिष्ठन्तु। मूर्ध्न्यादित्यास्तिष्ठन्तु। शिरसि महादेव-स्तिष्ठतु। शिखायां वामदेवस्तिष्ठतु। पृष्ठे पिनाकी तिष्ठतु। पुरतश्शूली तिष्ठतु। पार्श्वयोश्शिवाशङ्करौ तिष्ठेताम्। सर्वतो वायुस्तिष्ठतु। ततो बहिस्सर्वतोऽग्नि-

ज्वालामाला परिवृतस्तिष्ठतु। सर्वेष्वङ्गेषु सर्वा देवता यथास्थानं तिष्ठन्तु।।

*मां सकुटुम्बं रक्षन्तु।।*

अग्निर्मे वाचि श्रितः। वाग्घृदये। हृदयं मयि। अहममृते। अमृतं ब्रह्मणि।।

वायुर्मे प्राणे श्रितः। प्राणो हृदये। हृदयं मयि। अहममृते। अमृतं ब्रह्मणि।।

सूर्यो मे चक्षुषि श्रितः। चक्षुर् हृदये। हृदयं मयि। अहममृते। अमृतं ब्रह्मणि।।

चन्द्रमा मे मनसि श्रितः। मनो हृदये।

हृदयं मयि। अहममृते। अमृतं ब्रह्मणि।।

दिशो मे श्रोत्रे श्रिताः। श्रोत्रꣳ हृदये।

हृदयं मयि। अहममृते। अमृतं ब्रह्मणि।।

आपो मे रेतसि श्रिताः। रेतो हृदये।

हृदयं मयि। अहममृते। अमृतं ब्रह्मणि।।

पृथिवी मे शरीरे श्रिता। शरीरꣳ हृदये।

हृदयं मयि। अहममृते। अमृतं ब्रह्मणि।।

ओषधि वनस्पतयो मे लोमसु श्रिताः।

लोमानि हृदये। हृदयं मयि। अहममृते।

अमृतं ब्रह्मणि।।

इन्द्रो मे बले श्रितः। बलꣳ हृदये। हृदयं मयि। अहममृते। अमृतं ब्रह्मणि।।

पर्जन्यो मे मूर्ध्नि श्रितः। मूर्द्धा हृदये। हृदयं मयि। अहममृते। अमृतं ब्रह्मणि।।

ईशानो मे मन्यौ श्रितः। मन्युर् हृदये। हृदयं मयि। अहममृते। अमृतं ब्रह्मणि।।

आत्मा म आत्मनि श्रितः। आत्मा हृदये। हृदयं मयि। अहममृते। अमृतं ब्रह्मणि।।

पुनर्म आत्मा पुनरायुरागात्। पुनः प्राणः पुनराकूतमागात्। वैश्वानरो रश्मिभि र्वावृधानः। अन्तस्तिष्ठत्वमृतस्य गोपाः।।

आराधितो मनुष्यैस्त्वम्
सिद्धैर्देवासुरादिभिः।।
आराधयामि भक्त्या त्वाम्
अनुगृहाण महेश्वर।।

ध्यानम् ।।

ध्यायेन्निरामयं वस्तु सर्गस्थिति लयाधिकम्।
निर्गुणन्निष्कळन्नित्यं मनोवाचामगोचरम्।।

गंगाधरं शशिधरं जटामकुट शोभितम्।
श्वेतभूति त्रिपुण्ड्रेण विराजित ललाटकम्।।

लोचनत्रय संपन्नं स्वर्णकुण्डल शोभितम्।
स्मेराननञ्चतुर्बाहुं मुक्ताहारोपशोभितम्।।

अक्षमालां सुधाकुम्भं चिन्मयीं मुद्रिकामपि।
पुस्तकञ्च भुजैर्दिव्यैः दधानं पार्वतीपतिम्।।

श्वेताम्बरधरं श्वेतं रत्नसिंहासनस्थितम्।
सर्वाभीष्ट प्रदातारं वटमूल निवासिनम्।।

वामाङ्केसंस्थितां गौरीं बालार्कायुतसन्निभाम्
जपाकुसुम साहस्त्र समान श्रियमीश्वरीम्।।

सुवर्णरत्नखचित मकुटेन विराजिताम्।
ललाटपट्ट संराजत् सल्लँग्नतिलकाञ्चिताम्

राजीवायत नेत्रान्तां नीलोत्पल दळेक्षणाम्।
सन्तप्तहेमरचित ताटङ्काभरणान्विताम्।।

ताम्बूलचर्वणरत रक्तजिह्वा विराजिताम्।
पताकाभरणोपेतां मुक्ताहारोपशोभिताम्।।

स्वर्णकङ्कणसंयुक्तैः चतुर्भि र्बाहुभि र्युताम्।
सुवर्णरत्नखचित काञ्चीदाम विराजिताम्।।

कदळीलळितस्तम्भ सन्निभोरु युगान्विताम्।
श्रिया विराजित पदां भक्तत्राण परायणाम्।।

अन्योन्याश्लिष्ट हृद्बाहू गौरीशङ्करसंज्ञकम्
सनातनं परं ब्रह्म परमात्मानमव्ययम्।।

आवाहयामि जगतां ईश्वरं परमेश्वरम्।।

मङ्गळायतनन्देवं युवानमतिसुन्दरम्।
ध्यायेत् कल्पतरोर्मूले सुखासीनं सहोमया।।

आवाहनम्-

आत्वा वहन्तु हरय स्सचेतस श्श्वेतैरश्वै स्सहकेतुमद्भिः। वाताजितै र्बलवद्भि र्मनोजवैरायाहि शीघ्रं मम हव्याय शर्वोम् -

त्र्यम्बकँय्यजामहे सुगन्धिं पुष्टिवर्द्धनम्। उर्वारुकमिव बन्धनान्मृत्यो र्मुक्षीय माऽमृतात्।

गौरीमिमाय सलिनानि तक्षत्येकपदी द्विपदी सा चतुष्पदी। अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन्न्।।

ओं नमस्ते रुद्र मन्यवे....उत ते नमः। ओं ह्रीं नमश्शिवाय। सद्योजातं प्रपद्यामि। ओं भूर्भुवस्सुवरों असमिन् कुम्भे महादेवं ध्यायामि।(एवं क्रमेण शिवं, रुद्रं, शंकरं, नीललोहितं, ईशानं, विजयं, भीमं, देवदेवं, भवोद्भवं, (मद्ध्ये) आदित्यात्मकरुद्रं तत्तत्कलशेषु आवाह्य)

*प्राणप्रतिष्ठा।।*

२. *आसनम्*- या त इषुः...रुद्रमृडय। ओं ह्रीं नमश्शिवाय। सदेयोजाताय वै नमो नमः। रत्नसिंहासनं समर्पयामि।

३. *पाद्यम्*- या ते रुद्र...चाकशीहि। ओं ह्रीं नमश्शिवाय। भवेभवे नातिभवे भवस्व मां। पादयोः पाद्यं समर्पयामि।।

५. *अर्घ्यम्*- यामिषुं गिरिशन्त...पुरुषं जगत्। ओं ह्रीं नमश्शिवाय। भवोद्भवाय नमः। अर्घ्यं समर्पयामि।।

६. *आचमनम्*- शिवेन वचसा....सुमना असत्। ओं ह्रीं नमश्शिवाय। वामदेवाय नमः। आचमनीयं समर्पयामि।।

६. *मधुपर्कम्*- अद्ध्यवोचदधिवक्ता...यातुधान्यः। ओं ह्रीं नमश्शिवाय। ज्येष्ठाय नमः।। मधुपर्कं समर्पयामि।।

७. *स्नानम्*- असौ यस्ताम्रो....हेड ईमहे। ओं ह्रीं नमश्शिवाय। श्रेष्ठाय नमः। स्नानं समर्पयामि।। स्नानानन्तरं आचमनीयं समर्पयामि।।

८. *वस्त्रोत्तरीयम्*- असौ योऽवसर्पति ...मृडयाति नः। ओं ह्रीं नमश्शिवाय। रुद्राय नमः। वस्त्रोत्तरीयं समर्पयामि।।

९. *उपवीतम्*- नमो अस्तु नीलग्रीवाय,,,,अकरन्नमः। ओं ह्रीं नमश्शिवाय। कालाय नमः। यज्ञोपवीताभरणानि समर्पयामि।

१०. *गन्धम्*- प्रमुञ्च...भगवो वप। ओं ह्रीं नमश्शिवाय। कलविकरणाय नमः। गन्धान् धारयामि।। गन्धस्योपरि अक्षतान् समर्पयामि।।

११. *पुष्पम्*- अवतत्य धनुस्त्वं...सुमना भव। ओं ह्रीं नमश्शिवाय। बलविकरणाय नमः। पुष्पाणि समर्पयामि।।

*अर्चना*- ओं भवाय देवाय नमः। ओं शर्वाय देवाय नमः। ओं ईशानाय देवाय नमः। ओं पशुपतये देवाय नमः। ओं रुद्राय देवाय नमः। ओं उग्राय देवाय नमः। ओं भीमाय देवाय नमः। ओं महते देवाय नमः।।

ओं भवस्य देवस्य पत्न्यै नमः। ओं शर्वस्य देवस्य पत्न्यै नमः। ओं ईशानस्य देवस्य पत्न्यै नमः। ओं पशुपतेर्देवस्य पत्न्यै नमः। ओं रुद्रस्य देवस्य पत्न्यै नमः। ओं उग्रस्य देवस्य पत्न्यै नमः। ओं भीमस्य देवस्य पत्न्यै नमः। ओं महतो देवस्य पत्न्यै नमः। ओं महादेवादिभ्यो रुद्रेभ्यो नमः। समस्तोपचारान् समर्पयामि।।

१२. *धूपम्*- विज्यन्धनुः ... निषङ्गथिः। ओं ह्रीं नमश्शिवाय। बलाय नमः। धूपमाघ्रापयामि।।

१३. *दीपम्*- या ते हेतिः...परिब्भुज। ओं ह्रीं नमश्शिवाय। बलप्रमथनाय नमः। दीपं सन्दर्शयामि। धूपदीपानन्तरं आचमनीयं समर्पयामि।।

१४. *नैवेद्यम्*- ओं भूर्भुवस्सुवः.. ब्रह्मणे स्वाहा।।
नमस्ते अस्त्वायुधाय....तव धन्वने। ओं ह्रीं नमश्शिवाय।
सर्वभूतदमनाय नमः। ...निवेदयामि।। आचमनीयं
समर्पयामि।।

१५. *ताम्बूलम्*- ओं भूर्भुवस्सुवः। परि तेधन्वनो...
निर्धेहितम्।।ओं ह्रीं नमश्शिवाय। मनोन्मनाय नमः।
कर्पूरताम्बूलं समर्पयामि।।

१६. *नीराजनम्*- नमस्ते अस्तु भगवन् ...महादेवाय नमः।
ओं ह्रीन्नमश्शिवाय। महादेवादिभ्यो रुद्रेभ्यो नमः।
सर्वोपचारार्थे कर्पूर नीराजनं सन्दर्शयामि।।
ओंहर ओंहर ओं हर।।

*अर्चना*- त्रिशत्या।।
*प्रदक्षिणम्*- द्रापे अन्धसस्पते...इत्यनुवाकेन प्रदक्षिणानि।
*नमस्काराः*- सहस्राणि सहस्रशः इत्नुवाकेन नमस्काराः।।
*प्रार्थना*- चमकानुवाकैः सर्वाभीष्टं प्रार्थयेत्।।

## रुद्रत्रिशती

ओन्नमो हिरण्यबाहवे नमः। ओं सेनान्ये नमः।
ओं दिशाञ्च पतये नमः।

ओन्नमो वृक्षेभ्यो नमः। ओं हरिकेशेभ्यो नमः। ओं
पशूनां पतये नमः।

ओं नमस्सस्पिञ्जराय नमः। ओं त्विषीमते नमः।
ओं पथीनां पतये नमः।

ओन्नमो बभ्लुशाय नमः। ओं विव्याधिने नमः।
ओं अन्नानां पतये नमः।

ओन्नमो हरिकेशाय नमः। ओं उपवीतिने नमः।
ओं पुष्टानां पतये नमः।

ओन्नमो भवस्य हेत्यै नमः। ओं जगतां पतये नमः।

ओन्नमो रुद्राय नमः। ओं आततताविने नमः। ओं क्षेत्राणां पतये नमः।

ओन्नमस्सूताय नमः। ओं अहन्त्याय नमः। ओं वनानां पतये नमः।

ओन्नमो रोहिताय नमः। ओं स्थपतये नमः। ओं वृक्षाणां पतये नमः।

ओन्नमो मन्त्रिणे नमः। ओं वाणिजाय नमः। ओं कक्षाणां पतये नमः।

ओन्नमो भुवन्तये नमः। ओं वारिवस्कृताय नमः। ओं ओषधीनां पतये नमः।

ओन्नम उच्चैर्घोषाय नमः। ओं आक्रन्दयते नमः।

ओं पत्तीनां पतये नमः।

ओन्नमः कृथ्स्नवीताय नमः। ओं धावते नमः।

ओं सत्त्वनां पतये नमः।। [३८]

*****

ओन्नमस्सहमानाय नमः। ओं निव्याधिने

नमः। ओं आव्याधिनीनां पतये नमः।

ओं नमः ककुभाय नमः। ओं निषङ्गिणे नमः।

ओं स्तेनानां पतये नमः।

ओन्नमो निषङ्गिणे नमः। ओं इषुधिमते नमः।

ओं तस्कराणां पतये नमः।

ओं नमो वञ्चते नमः। ओं परिवञ्चते नमः।

ओं स्तायूनां पतये नमः।

ओन्नमो निचेरवे नमः। ओं परिचराय नमः।

ओं अरण्यानां पतये नमः।

ओं नमस्सृकाविभ्यो नमः। ओं जिघाꣳसद्भ्यो नमः। ओं मुष्णतां पतये नमः।

ओं नमोऽसिमद्भ्यो नमः। ओं नक्तञ्चरद्भ्यो नमः। ओं प्रकृन्तानां पतये नमः।

ओन्नम उष्णीषिणे नमः। ओं गिरिचराय नमः।

ओं कुलुञ्चानां पतये नमः।

ओन्नम इषुमद्भ्यो नमः। ओं धन्वाविभ्यश्च नमः।

ओं वो नमः।

ओन्नम आतन्वानेभ्यो नमः। ओं प्रतिदधानेभ्यश्च नमः। ओं वो नमः।

ओन्नम आयच्छद्भ्यो नमः। ओं विसृजद्भ्यश्च नमः। ओं वो नमः।

ओन्नमोऽस्यद्भ्यो नमः। ओं विद्ध्यद्भ्यश्च नमः। ओं वो नमः।

ओन्नम आसीनेभ्यो नमः। ओं शयानेभ्यश्च नमः। ओं वो नमः।

ओन्नमस्स्वपद्भ्यो नमः। ओं जाग्रद्भ्यश्च नमः। ओं वो नमः।

ओन्नमस्तिष्ठद्भ्यो नमः। ओ धावद्भ्यश्च नमः।

ओं वो नमः।

ओन्नमस्सभाभ्यो नमः। ओं सभापतिभ्यश्च नमः।

ओं वो नमः।

ओन्नमो अश्वेभ्यो नमः। ओं अश्वपतिभ्यश्च नमः।

ओं वो नमः।। [८९]।।

******

ओन्नम आव्याधिनीभ्यो नमः।

ओं विविद्ध्यन्तीभ्यश्च नमः। ओं वो नमः।

ओन्नम उगणाभ्यो नमः। ओं तृꣳहतीभ्यश्च नमः।

ओं वो नमः।

ओन्नमो गृत्सेभ्यो नमः। ओं गृत्सपतिभ्यश्च नमः।

## रुद्रत्रिशती

ओं वो नमः।

ओन्नमो व्रातेभ्यो नमः। ओं व्रातपतिभ्यश्च नमः।

ओं वो नमः।

ओन्नमो गणेभ्यो नमः। ओं गणपतिभ्यश्च नमः।

ओं वो नमः।

ओन्नमो विरूपेभ्यो नमः। ओं विश्वरूपेभ्यश्च नमः। ओं वो नमः।

ओन्नमो महद्भ्यो नमः। ओं क्षुल्लकेभ्यश्च नमः।

ओं वो नमः।

ओन्नमो रथिभ्यो नमः। ओं अरथेभ्यश्च नमः।

ओं वो नमः।

ओन्नमो रथेभ्यो नमः। ओं रथपतिभ्यश्च नमः।
ओं वो नमः।

ओन्नमस्सेनाभ्यो नमः। ओं सेनानिभ्यश्च नमः।
ओं वो नमः।

ओन्नमः क्षत्तृभ्यो नमः। ओं संग्रहीतृभ्यश्च नमः।
ओं वो नमः।

ओन्नमस्तक्षभ्यो नमः। ओं रथकारेभ्यश्च नमः।
ओं वो नमः।

ओन्नमः कुलालेभ्यो नमः। ओं कर्मारेभ्यश्च
नमः। ओं वो नमः।

ओन्नमः पुञ्जिष्टेभ्यो नमः। ओं निषादेभ्यश्च

नमः। ओं वो नमः।

ओन्नम इषुकृद्भ्यो नमः। ओं धन्वकृद्भ्यश्च नमः। ओं वो नमः।

ओन्नमो मृगयुभ्यो नमः। ओं श्वनिभ्यश्च नमः। ओं वो नमः।

ओन्नमश्श्वभ्यो नमः। ओं श्वपतिभ्यश्च नमः। ओं वो नमः। [१४०]।।

*****

ओन्नमो भवाय च नमः। ओं रुद्राय च नमः। ओन्नम श्शर्वाय च नमः। ओं पशुपतये च नमः। ओन्नमो नीलग्रीवायच नमः। ओं शितिकण्ठायच नमः।

## रुद्रत्रिशती

ओन्नमः कपर्दिने च नमः। ओं व्युप्तकेशाय च नमः।

ओन्नमस्सहस्राक्षाय च नमः। ओं शतधन्वने च नमः।

ओन्नमो गिरिशाय च नमः। ओं शिपिविष्टाय च नमः।

ओन्नमो मीढुष्टमाय च नमः। ओं इषुमते च नमः।

ओन्नमो ह्रस्वाय च नमः। ओं वामनाय च नमः।

ओन्नमो बृहते च नमः। ओं वर्षीयसे च नमः।

ओन्नमो वृद्धाय च नमः। ओं संवृद्ध्वने च नमः।

ओन्नमो अग्रियाय च नमः। ओं प्रथमाय च नमः।

ओन्नम आशवे च नमः। ओं अजिराय च नमः।

ओन्नम श्शीघ्रियाय च नमः। ओं शीभ्याय च नमः।

ओन्नम ऊर्म्याय च नमः। ओं अवस्वन्याय च नमः।

ओन्नम स्स्रोतस्याय च नमः। ओं द्वीप्याय च नमः।।

[१७०]।। *****

ओन्नमो ज्येष्ठाय च नमः। ओं कनिष्ठाय च नमः।

ओन्नमः पूर्वजाय च नमः। ओं अपरजाय च नमः।

ओन्नमो मद्ध्यमाय च नमः। ओं अपगल्भायच नमः।

ओन्नमो जघन्याय च नमः। ओं बुद्ध्निंयाय च नमः।

ओन्नमस्सोभ्याय च नमः। ओं प्रतिसर्याय च नमः।

ओन्नमो याम्याय च नमः। ओं क्षेम्याय च नमः।

ओन्नम उर्वर्याय च नमः। ओं खल्याय च नमः।

ओन्नमश्श्लोक्याय च नमः। ओं अवसान्याय च नमः।

ओन्नमो वन्याय च नमः। ओं कक्ष्याय च नमः।

ओन्नम श्श्रवाय च नमः। ओं प्रतिश्रवाय च नमः।

ओन्नम आशुषेणाय च नमः। ओं आशुरथाय च नमः

ओन्नम श्शूराय च नमः। ओं अवभिन्दते च नमः।

ओन्नमो वर्मिणेच नमः। ओं वरूथिने च नमः।

ओन्नमो बिल्मिने च नमः। ओं कवचिने च नमः।

ओन्नम श्श्रुताय च नमः। ओं श्रुतसेनाय च नमः।

[२००]।।

*****

ओन्नमो दुन्दुभ्याय च नमः। ओं आहनन्याय च नमः।

ओन्नमो धृष्णवे च नमः। ओं प्रमृशाय च नमः।

ओन्नमो दूताय च नमः। ओं प्रहिताय च नमः।

ओन्नमो निषङ्गिणे च नमः। ओं इषुधिमते च नमः।

## रुद्रत्रिशती

ओन्नमस्तीक्ष्णेषवे च नमः। ओं आयुधिने च नमः।

ओन्नमस्स्वायुधाय च नमः। ओं सुधन्वने च नमः।

ओन्नमस्स्रुत्याय च नमः। ओं पथ्याय च नमः।

ओन्नमः काट्याय च नमः। ओं नीप्याय च नमः।

ओन्नमस्सूद्याय च नमः। ओं सरस्याय च नमः।

ओन्नमो नाद्याय च नमः। ओं वैशन्ताय च नमः।

ओन्नमः कूप्याय च नमः। ओं अवट्याय च नमः।

ओन्नमो वर्ष्याय च नमः। ओं अवर्ष्याय च नमः।

ओन्नमो मेघ्याय च नमः। ओं विद्युत्याय च नमः।

ओन्नम ईद्ध्रियाय च नमः। ओं आतप्याय च नमः।

ओन्नमो वात्याय च नमः। ओं रेष्मियाय च नमः।

## रुद्रत्रिशती

ओन्नमो वास्तव्याय च नमः। ओं वास्तुपाय च नमः।

[२३२]।।

*****

ओन्नम स्सोमाय च नमः। ओ रुद्राय च नमः।

ओन्नमस्ताम्राय च नमः। ओं अरुणाय च नमः।

ओन्नमश्शङ्गाय च नमः। ओं पशुपतये च नमः।

ओन्नम उग्राय च नमः। ओं भीमाय च नमः।

ओन्नमो अग्रेवधाय च नमः। ओं दूरेवधाय च नमः।

ओन्नमो हन्त्रे च नमः। ओं हनीयसे च नमः।

ओन्नमो वृक्षेभ्यो नमः। ओं हरिकेशेभ्यो नमः।

ओन्नमस्ताराय नमः।

ओन्नमश्शम्भवे च नमः। ओं मयोभवे च नमः।

ओन्नम श्शङ्कराय च नमः। ओं मयस्कराय च नमः।

ओन्नम श्शिवाय च नमः। ओं शिवतराय च नमः।

ओन्नमस्तीर्थ्याय च नमः। ओं कूल्याय च नमः।

ओन्नमः पार्याय च नमः। ओं अवार्याय च नमः।

ओन्नमः प्रतरणाय च नमः। ओं उत्तरणाय च नमः।

ओन्नम आतार्याय च नमः। ओं आलाद्याय च नमः।

ओन्नमश्शष्प्याय च नमः। ओं फेन्याय च नमः।

ओन्नम स्सिकत्याय च नमः। ओं प्रवाह्याय च नमः।

[२६५]।।

*****

## रुद्रत्रिशती

ओन्नम इरिण्याय च नमः। ओं प्रपत्थ्याय च नमः।
ओन्नमः किंशिलाय च नमः। ओं क्षयणाय च नमः।
ओन्नमः कपर्दिने च नमः। ओं पुलस्तये च नमः।
ओन्नमो गोष्ठ्याय च नमः। ओं गृह्याय च नमः।
ओं नमस्तल्प्याय च नमः। ओं गेह्याय च नमः।
ओन्नमः काट्याय च नमः। ओं गह्वरेष्ठाय च नमः
ओन्नमो ह्रदय्याय च नमः। ओं निवेष्प्याय च नमः।
ओन्नमः पांसव्याय च नमः। ओं रजस्याय च नमः।
ओन्नम श्शुष्क्याय च नमः। ओं हरित्याय च नमः।
ओन्नमो लोप्याय च नमः। ओं उलप्याय च नमः।
ओन्नम ऊर्व्याय च नमः। ओं सूर्म्याय च नमः।

## रुद्रत्रिशती

ओन्नमः पर्ण्याय च नमः। ओं पर्णशद्याय च नमः।

ओन्नमोऽपगुरमाणाय च नमः। ओं अभिघ्नते च नमः।

ओन्नम आक्खिदते च नमः। ओं प्रक्खिदते च नमः।

ओन्नमो वो नमः।

ओं किरिकेभ्यो नमः। ओं देवानाꣳहृदयेभ्यो नमः।

ओन्नमो विक्षीणकेभ्यो नमः।

ओन्नमो विचिन्वत्केभ्यो नमः।

ओन्नम आनिर्हतेभ्यो नमः।

ओन्नम आमीवत्केभ्यो नमः।। [३००]।।

।। इति रुद्रत्रिशती समाप्ता ।।

************

आयुराशास्तेऽयँय्यजमानोऽसौ। आयुराशास्ते। सुप्रजास्त्वमाशास्ते। सजातवनस्यामाशास्ते। उत्तरान्देवयज्यामाशास्ते। भूयो हविष्करणमाशास्ते। दिव्यन्धामाशास्ते। विश्वं प्रियमाशास्ते। यदनेन हविषाऽऽशास्ते। तदश्यात्तदृद्ध्यात्। तदस्मै देवा रासन्ताम्। तदग्नि देवो देवेभ्यो वनते। वयमग्नेर्मानुषाः। इष्टञ्च वीतञ्च। उभे च नो द्यावापृथिवी अꣳहस्पाताम्। इहगतिर्वामस्येदञ्च। नमो देवेभ्यः॥

हरिः ओ(३)म्॥